# तर्कसंग्रहचंद्रिका।

## तर्कसंग्रहसहिता।

इयं व्याख्या गभीरार्थापि सुन्दरतरास्ति। अस्याः प्रणेता श्रीकाशीस्थः प्राच्यो विद्वान् महामहोपाध्यायप्रतिभो गाडेगिलोपाह्वः श्रीमुकुन्दशर्मासीदिति ज्ञायते। बालाल्पमतिदुरवबोधविषयचिख्यापयिषुणानेन व्याख्यात्रा महता परिश्रमेण व्यरचीयं टीका तथा च विविधटिप्पणपरिष्कारपरिष्कृतास्तीति विद्यार्थिभिरादरणीया. मूल्यं ।≈ ट. ८-

# ऐतरेयब्राह्मणम्।

## (पञ्चिका ८)

अयं ग्रन्थ आमूलान्तं भाष्येण संवाद्य वैदिकसंप्रदायपाठान्मूले संस्थाप्य भाष्यादतपाठान्पृष्ठाधो विनिवेश्य वैदिकद्वारा संशोधनेन संस्कृत्य मुद्रितोस्ति। मूल्यं १ रु. ट. ८=

# मीमांसान्यायप्रकाशः।

## (आपोदेवी)

अयं पूर्वमीमांसाशास्त्रस्य सुप्रसिद्धः प्रकरणग्रन्थोऽध्येतॄणामध्यापकानां चातीवोपकारकोऽस्ति। अस्य प्राचीनानि हस्तलिखितानि मुद्रितानि च कतिपयपुस्तकानि संपाद्य पाठान्तरैः स्थलविशेषे विशेषटिप्पणैश्च सनाथीकृत्याङ्कितः मू. ।।· ८-

# कुण्डरत्नावली-व्याख्यासहिता।

## कुण्डानां वेदीनां च ६४ आकृतिसंख्या।

इष्टापूर्तादिकृत्यानि प्रायः सन्ति कुण्डमण्डपसाध्यानि। तत्र कस्मिन्कर्मणि कियदायामविस्तरवान्मण्डपोऽपेक्षितः कथं वा विविधकुण्डानां वेदीनां च प्रमाणायामविस्तारादीति निर्णयो भवत्यनेन ग्रन्थरत्नेन।

**अत्रविशेषः**—वृत्तकरणात्सूत्रपातनेन साध्या कुण्डवेदीप्रकृतिः सूत्रमार्जनेन सिद्धा सेत्युभयविधा आकृतयः प्रयत्नेन निर्माय तत्रतत्र यथा सर्वेषां यथावज्ज्ञानं स्यादेवं विन्यस्ताः सन्ति. मू. १ ट. ८=